# संस्कृतनिपुणता
# Level-02

Janaseva Trust Premises, Magadi Main Road,
Channenahalli, Bengaluru- 562130
Ph- +91 8431668084 , info@vvss.res.in www.vvss.res.in

| गणः | प्रत्ययः | सूत्रम् | गणः | प्रत्ययः | सूत्रम् |
|---|---|---|---|---|---|
| **भ्वादिगणः** | शप् | कर्तरि शप् ३/१/६८ | **तुदादिगणः** | श | (तुदादिभ्यः शः ३/१/७७) |
| **अदादिगणः** | शप् (तस्य लुक् भवति) | अदिप्रभृतिभ्यः शपः २/४/७२ | **रुधादिगणः** | श्नम् | (रुधादिभ्यः श्नम् ३/१/७८) |
| **जुहोत्यादिगणः** | शप् (तस्य श्लु भवति) | जुहोत्यादिभ्यः श्लुः २/४/७५ | **तनादिगणः** | उ | (तनादिकृञ्भ्य उः ३/१/७९) |
| **दिवादिगणः** | श्यन् | दिवादिभ्यः श्यन् ३/१/६९ | **क्र्यादिगणः** | श्ना | (क्र्यादिभ्यः श्ना ३/१/८१) |
| **स्वादिगणः** | श्नु | स्वादिभ्यः श्नुः ३/१/७३ | **चुरादिगणः** | शप् | (कर्तरि शप् ३/१/६८) |

Veda Vijnana Shodha Samsthanam
Centre for Śāstra and Contemporary Studies

| कालबोधकत्वम् | | विध्याद्यर्थबोधकत्वम् | |
|---|---|---|---|
| लट् | वर्तमाने | लोट् | विधिः, प्रार्थना, आमन्त्रणम्, आज्ञा, आशीः |
| लुङ् | भूतकाले | विधिलिङ् | विधिः, प्रार्थना, आमन्त्रणम्, सम्भावना |
| लङ् | अनद्यतन-भूतकाले | आशीर्लिङ् | आशीः |
| लिट् | भूतानद्यतन-परोक्षे | लृङ् | हेतुहेतुमद्भावे |
| लृट् | भविष्यति | लेट् | अयं वेदे केवलम् उपयुज्यते। |
| लुट् | अनद्यतन-भविष्यति | | |

[1] वर्तमाने लट् ३/२/१२३, लुङ् ३/२/११०, अनद्यतने लङ् ३/२/१११, परोक्षे लिट् ३/२/११५, लृट् शेषे च ३/३/१३, अनद्यतने लुट् ३/३/१५

[2] विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ् ३/३/१६१, लोट् च ३/३/१६२, आशिषि लिङ्लोटौ ३/३/१७३, लिङ्निमित्ते लृङ् क्रियातिपत्तौ ३/३/१३९

श्रुत्वा चैतत्त्रिलोकज्ञो वाल्मीकेर्नारदो वचः ।
श्रूयतामिति चामन्त्र्य प्रहृष्टो वाक्यमब्रवीत् ॥1.1.6॥

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

त्रिलोकज्ञः नारदः वाल्मीकेः एतत् वचः श्रुत्वा श्रूयताम् इति आमन्त्र्य च प्रहृष्टः वाक्यम् अब्रवीत्।

- अन्वयार्थः

त्रिलोकज्ञः नारदः वाल्मीकेः प्रश्नान् श्रुत्वा श्रूयताम् इति सम्बोध्य सन्तुष्टः सन् वाक्यम् उक्तवान्।

श्रुत्वा चैतत्त्रिलोकज्ञो वाल्मीकेर्नारदो वचः ।
श्रूयतामिति चामन्त्र्य प्रहृष्टो वाक्यमब्रवीत् ॥1.1.6॥

- पदपरिचयः
  - श्रुत्वा – क्त्वान्तम् अव्ययम्
  - एतत् – एतद्, नपुं, द्वितीया, एकवचनम्
  - त्रिलोकज्ञः, नारदः, प्रहृष्टः – त्रिलोकज्ञ, नारद, प्रहृष्ट – पुं, प्रथमा, एकवचनम्
  - वाल्मीकेः – वाल्मीकि, पुं, षष्ठी, एकवचनम्
  - वचः – वचस्, नपुं, द्वितीया, एकवचनम्
  - श्रूयताम् – श्रु, भावे, लोट्, प्रथमपुरुषः, एकवचनम्
  - इति - अव्ययम्
  - आमन्त्र्य – आ+मत्रि+ल्यप्, अव्ययम्
  - वाक्यम् – वाक्य, नपुं, द्वितीया, एकवचनम्
  - अब्रवीत् – ब्रू, लङ्, प्रथमपुरुषः, एकवचनम्

| तिङ्प्रत्ययाः | | | लङ्लकारस्य प्रत्ययाः | | |
|---|---|---|---|---|---|
| तिप् | तस् | झि | त् | ताम् | अन् |
| सिप् | तस् | थ | स् | तम् | त |
| मिप् | वस् | मस् | अम् | व | म |

बहवो दुर्लभाश्चैव ये त्वया कीर्तिता गुणाः ।
मुने वक्ष्याम्यहं बुद्ध्वा तैर्युक्तश्श्रूयतान्नरः ॥1.1.7॥

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

मुने, त्वया ये बहवः दुर्लभाः च एव गुणाः कीर्तिताः तैः युक्तः नरः श्रूयताम्। अहं बुद्ध्वा वक्ष्यामि।

- अन्वयार्थः

नारदः वदति - मुने, त्वया बहवः दुर्लभाः गुणाः कथिताः, तैः गुणैः सहितः नरः वर्तते। श्रूयताम्। अहं तादृशं नरं ज्ञात्वा वदामि।

बहवो दुर्लभाश्चैव ये त्वया कीर्तिता गुणाः ।
मुने वक्ष्याम्यहं बुद्ध्वा तैर्युक्तश्श्रूयतान्नरः ॥1.1.7॥

- पदपरिचयः
  - बहवः, दुर्लभाः, कीर्तिताः, गुणाः – बहु, दुर्लभ, कीर्तित, गुण - पुं, प्रथमा, बहुवचनम्
  - एव - अव्ययम्
  - ये – यद्, सर्वनाम, पुं, प्रथमा, बहुवचनम्
  - त्वया – युष्मद्, सर्वनाम, तृतीया, एकवचनम्
  - युक्तः, नरः – युक्त, नर – पुं, प्रथमा, एकवचनम्
  - मुने – मुनि, पुं, सम्बोधनम्, एकवचनम्
  - वक्ष्यामि – वच्, लृट्, उत्तमपुरुषः, एकवचनम्
  - अहम् – अस्मद्, सर्वनाम, पुं, प्रथमा, एकवचनम्
  - बुद्ध्वा – बुध्+क्त्वा, अव्ययम्
  - तैः – तद्, पुं, तृतीया, बहुवचनम्
  - श्रूयताम् – श्रु, भावे, लोट्, प्रथमपुरुषः, एकवचनम्

इक्ष्वाकुवंशप्रभवो रामो नाम जनैश्श्रुतः ।
नियतात्मा महावीर्यो द्युतिमान्धृतिमान् वशी ॥1.1.8॥

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

इक्ष्वाकुवंशप्रभवः नियतात्मा महावीर्यः द्युतिमान् धृतिमान् वशी जनैः श्रुतः रामः नाम (अस्ति)

- अन्वयार्थः

इक्ष्वाकुवंशे उत्पन्नः जितान्तःकरणः महापराक्रमी कान्तिमान् धैर्यवान् जितेन्द्रियः जनेषु प्रसिद्धः रामनामकः अस्ति।

## इक्ष्वाकुवंशप्रभवो रामो नाम जनैश्श्रुतः ।
## नियतात्मा महावीर्यो द्युतिमान्धृतिमान् वशी ॥1.1.8॥

- पदपरिचयः

- इक्ष्वाकुवंशप्रभवः, रामः, महावीर्यः, श्रुतः – इक्ष्वाकुवंश, प्रभव, महावीर्य, श्रुत – पुं, प्रथमा, एकवचनम् ।
- नाम – अव्ययम्, प्रसिद्ध्यर्थे ।
- जनैः – जन – पुं, तृतीया, बहुवचनम् ।
- द्युतिमान्, धृतिमान् – द्युतिमत्, धृतिमत् – पुं, प्रथमा, एकवचनम् ।
- नियतात्मा, वशी – नियतात्मन्, वशिन् – पुं, प्रथमा, एकवचनम् ।

## बुद्धिमान्नीतिमान्वाग्मी श्रीमान् शत्रुनिबर्हणः ।
## विपुलांसो महाबाहुः कम्बुग्रीवो महाहनुः ॥1.1.9॥

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

(सः रामः) बुद्धिमान् नीतिमान् वाग्मी श्रीमान् शत्रुनिबर्हणः विपुलांसः महाबाहुः कम्बुग्रीवः महाहनुः (अस्ति)

- अन्वयार्थः

सः रामः बुद्धिमान् नीतिज्ञः श्रेष्ठवक्ता ऐश्वर्यसम्पन्नः शत्रुनाशकः विशालस्कन्धः महाबाहुः शंखसदृशकण्ठः प्रशस्तहनुः च अस्ति।

Veda Vijnana
Shodha Samsthanam
Centre for Śāstra and Contemporary Studies

बुद्धिमान्नीतिमान्वाग्मी श्रीमान् शत्रुनिबर्हणः ।
विपुलांसो महाबाहुः कम्बुग्रीवो महाहनुः ॥1.1.9॥

- पदपरिचयः

- बुद्धिमान्, नीतिमान्, श्रीमान् – बुद्धिमत्, नीतिमत्, श्रीमत् – पुं, प्रथमा, एकवचनम् ।
- वाग्मी – वाग्मिन् – पुं, प्रथमा, एकवचनम् ।
- शत्रुनिबर्हणः, विपुलांसः, कम्बुग्रीवः – शत्रुनिबर्हण, विपुलांस, कम्बुग्रीव – पुं, प्रथमा, एकवचनम् ।
- महाबाहुः, महाहनुः – महाबाहु, महाहनु – पुं, प्रथमा, एकवचनम् ।